## नवमः सर्गः

तस्यालयवरिष्ठस्य मध्ये विमलमायतम्।
ददर्श भवनश्रेष्ठं हनुमान् मारुतात्मजः।।5.9.1।।

अर्धयोजनविस्तीर्णमायतं योजनं महत्।
भवनं राक्षसेन्द्रस्य बहुप्रासादसङ्कुलम्।।5.9.2।।

मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम्।
सर्वतः परिचक्राम हनूमानरिसूदनः।।5.9.3।।

उत्तमं राक्षसावासं हनुमानवलोकयन्।
आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम्।।5.9.4।।

चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च।
परिक्षिप्तमसम्बाधं रक्ष्यमाणमुदायुधैः।।5.9.5।।

राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम्।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम्।।5.9.6।।

तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम्।
वायुवेगसमाधूतं पन्नगैरिव सागरम्।।5.9.7।।

या हि वैश्रवणे लक्ष्मीर्या चन्द्रे हरिवाहने।
सा रावणगृहे रम्या नित्यमेवानपायिनी।।5.9.8।।

या च राज्ञः कुबेरस्य यमस्य वरुणस्य च।

तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह।।5.9.9।।

तस्य हर्म्यस्य मध्यस्थवेश्म चान्यत्सुनिर्मितं।
बहुनिर्यूहसंयुक्तं ददर्श पवनात्मजः।।5.9.10।।

ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा।
विमानं पुष्पकं नाम सर्वरत्नविभूषितम्।।5.9.11।।

परेण तपसा लेभे यत्कुबेरः पितामहात्।
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः।।5.9.12।।

ईहामृगसमायुक्तैः कार्तस्वरहिरमण्मयैः।
सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया।।5.9.13।।

मेरुमन्दरसङ्काशैरुल्लिखद्भिरिवाम्बरं।
कूटागारैः शुभाकारैः सर्वतः समलङ्कृतम्।।5.9.14।।

ज्वलनार्कप्रतीकाशैः सुकृतं विश्वकर्मणा।
हेमसोपानसंयुक्तं चारुप्रवरवेदिकम्।।5.9.15।।

जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि।
इन्द्रनीलमहानीलमणिप्रवरवेदिकम्।।5.9.16।।

विद्रुमेण विचित्रेण मणिभिश्च महाधनैः।
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम्।।5.9.17।।

चन्दनेन च रक्तेन तपनीयनिभेन च।
सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम्।।5.9.18।।

विमानं पुष्पकं दिव्यमारुरोह महाकपिः।
तत्रस्थः सर्वतो गन्धं पानभक्ष्यान्नसम्भवम्।।5.9.19।।

दिव्यं सम्मूर्छितं जिघ्रन् रूपवन्तमिवानिलम्।
स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम्।।5.9.20।।

इत एहीत्युवाचेव तत्र यत्र स रावणः।
ततस्तां प्रस्थितः शालां ददर्श महतीं शिवाम्।।5.9.21।।

रावणस्य महाकान्तां कान्तामिव वरस्त्रियम्।
मणिसोपानविकृतां हेमजालविराजिताम्।।5.9.22।।

स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम्।
मुक्तावज्रप्रवालैश्च रूप्यचामीकरैरपि।।5.9.23।।

विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम्।
समैर्ऋजुभिरत्युच्चैः समन्तात्  सुविभूषितैः।।5.9.24।।

स्तम्भै: पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव।
महत्या कुथयाऽऽस्तीर्णां पृथिवीलक्षणाङ्कया।।5.9.25।।

पृथिवीमिव विस्तीर्णां सराष्ट्रगृहशालिनीम्।
नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम्।।5.9.26।।

परार्ध्यास्तरणोपेतां रक्षोऽधिपनिषेविताम्।

धूम्राामगरुधूपेन विमलां हंसपाण्डुराम्।।5.9.27।।

पत्रपुष्पोपहारेण कल्माषीमिव सुप्रभाम्।
मनसोमोदजननीं वर्णस्यापि प्रसादिनीम्।।5.9.28।।

तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव।
इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः।।5.9.29।।

तर्पयामास मातेव तदा रावणपालिता।

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्यापि पुरी भवेत्।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः।।5.9.30।।

प्रध्यायत इवापश्यत् प्रदीपांस्तत्र काञ्चनान्।
धूर्तानिव महाधूतैर्देवनेन पराजितान्।।5.9.31।।

दीपानां च प्रकाशेन तेजसा रावणस्य च।
अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत।।5.9.32।।

ततोऽपश्यत् कुथासीनं नानावरणाम्बरस्रजम्।
सहस्रं वरनारीणां नानावेषविभूषितम्।।5.9.33।।

परिवृत्तेऽर्धरात्रे तु पाननिद्रावशंगतम्।
क्रीडित्वोपरतं रात्रौ प्रसुप्तं बलवत्तदा।।5.9.34।।

तत् प्रसुप्तं विरुरुचे निःशब्दान्तरभूषितम्।
निःशब्दहंसभ्रमरं यथा पद्मवनं महत्।।5.9.35।।

तासां संवृतदान्तानि मीलिताक्षीणि मारुतिः।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम्।।5.9.36।।

प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये।
पुनः संवृतपत्राणि रात्राविव बभुस्तदा।।5.9.37।।

इमानि मुखपद्मानि नियतं मत्तषट्पदाः।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः।।5.9.38।।

इति वामन्यत श्रीमानुपपत्त्या महाकपिः।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः।।5.9.39।।

सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता।
शरदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता।।5.9.40।।

स च ताभिः परिवृतः शुशुभे राक्षसाधिपः।
यथा ह्युडुपतिः श्रीमांस्ताराभिरिव संवृतः।।5.9.41।।

याश्च्यवन्तेऽम्बरात् ताराः पुण्यशेषसमावृताः।
इमास्ताः सङ्गताः कृत्स्ना इति मेने हरिस्तदा।।5.9.42।।

ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम्।
प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम्।।5.9.43।।

व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणाः।
पानव्यायामकालेषु निद्रोपहतचेतसः।।5.9.44।।

व्यावृत्ततिलकाः काश्चित् काश्चिदुद्भ्रान्तनूपुराः।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः।।5.9.45।।

मुक्ताहारावृताश्चान्याः काश्चित् प्रस्रस्तवाससः।
व्याविद्धरशनादामाः किशोर्य इव वाहिताः।।5.9.46।।

अकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः।
गजेन्द्रमृदिताः फुल्ला लता इव महावने।।5.9.47।।

चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्गताः।
हंसा इव बभुस्सुप्ताः स्तनमध्येषु योषिताम्।।5.9.48।।

अपरासां च वैदूर्याः कादम्बा इव पक्षिणः।
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन्।।5.9.49।।

हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव।।5.9.50।।

किङ्किणीजालसङ्काशास्ता हेमविपुलाम्बुजाः।
भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः।।5.9.51।।

मृदुष्वङ्गेषु कासाञ्चित् कुचाग्रेषु च संस्थिताः।
बभूवुर्भूषणानीव शुभा भूषणराजयः।।5.9.52।।

अंशुकान्ताश्च कासाञ्चिन्मुखमारुतकम्पिताः।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः।।5.9.53।।

ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः।
नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे।।5.9.54।।

ववल्गुश्चात्र कासांचित्कुण्डलानि शुभार्चिषाम्।
मुखमारुतसंकम्पैर्मन्दं मन्दं च योषिताम्।।5.9.55।।

शर्कराऽसवगन्धः स  प्रकृत्या सुरभिः सुखः।
तासां वदननिःश्वासः सिषेवे रावणं तदा।।5.9.56।।

रावणाननशङ्काश्च काश्चिद् रावणयोषितः।
मुखानि च सपत्नीनामुपाजिघ्रन्  पुनः पुनः।।5.9.57।।

अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः।
अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा।।5.9.58।।

बाहूनुपनिधायान्याः पारिहार्यविभूषितान्।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे।।5.9.59।।

अन्या वक्षसि चान्यस्यास्तस्याः काचित्पुनर्भुजम्।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा कुचौ।।5.9.60।।

ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः।।5.9.61।।

अन्योन्यस्याङ्गसंस्पर्शात् प्रीयमाणाः सुमध्यमाः |

एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ||5.9.62||

अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा।।5.9.63।।

लतानां माधवे मासि फुल्लानां वायुसेवनात्।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम्।।5.9.64।।

प्रतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम्।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत्।।5.9.65।।

उचितेष्वपि सुव्यक्तं न तासां योषितां तदा।
विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम्।।5.9.66।।

रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः।
ज्वलन्तः काञ्चना दीपाः प्रेक्षन्तो निमिषा इव।।5.9.67।।

राजर्षिविप्रदैत्यानां गन्धर्वाणां च योषितः।
राक्षसां  चाभवन् कन्यास्तस्य कामवशंगताः।।5.9.68।।

युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः।
समदा मदनेनैव मोहिताः काश्चिदागताः।।5.9.69।।

न तत्र काश्चित् प्रमदाः प्रसह्य वीर्योपपन्नेन गुणेन लब्धाः।
न चान्यकामापि न चान्यपूर्वा विना वरार्हां जनकात्मजां तु ।।5.9.70।।

न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता।
भार्याभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य न कामनीया।।5.9.71।।

बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी।
इमा महाराक्षसराजभार्याः सुजातमस्येति हि साधुबुद्धेः।।5.9.72।।

पुनश्च सोऽचिन्तयादात्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता।
अथायमस्यां कृतवान्महात्मा लङ्केश्वरः कष्टमनार्यकर्म।।5.9.73।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे नवमस्सर्गः।